# दो शब्द

स्वतंत्र भारत की शिक्षाप्रणाली में संस्कृत का उचित स्थान होना चाहिये--इस विषय में कोई मतभेद नहीं हो सकता। आजकल, न केवल भारत में अपितु विदेशों में भी विमर्शक लोगों की यह धारणा बन गयी है कि भारत की संस्कृति और सभ्यता के समझने का एकमात्र उपाय संस्कृत-भाषा और संस्कृत-वाङ्मय का अध्ययन है। हम लोगों का तो कर्त्तव्य है कि हमारी संस्कृति और सभ्यता के गुण हमारी शिक्षापद्धति में ही क्यों हमारे समस्त जीवन में प्रतिबिम्बित दिखायी दें। यद्यपि भारतीय संस्कृति का परिचय हिन्दी आदि आधुनिक भाषा और साहित्य के परिशीलन से भी हो सकता है किन्तु यह परिचय उतना सच्चा और उतना गंभीर नहीं हो सकता जितना कि साक्षात् संस्कृतभाषा और साहित्य के परिशीलन से। इसी उद्देश्य को सामने रखकर हमारे शासन ने माध्यमिक शिक्षा में अनिवार्य हिन्दी के साथ संस्कृत का भी कुछ थोड़ा सा स्थान रखा है। किन्तु इतने से संस्कृत का ज्ञान पर्याप्त नहीं हो पाता। इस कमी को दूर करने के लिये लखनऊ विश्वविद्यालय ने अपनी बी० ए० परीक्षा के पाठ्यक्रम में अनिवार्य संस्कृत को स्थान दिया है।

यह 'द्वादशपुष्पिका' का संकलन उपर्युक्त उद्देश्य को सामने रखकर किया गया है । इस 'संकलन' में संस्कृत-विभाग के अध्यापक-गण ने संस्कृतसाहित्य के सरल सन्दर्भों को चुनकर रखा है। ये सन्दर्भ सरल हैं और आदर्श संस्कृत के नमूने हैं। वाल्मीकि और व्यास, मनु और याज्ञवल्क्य, भास और कालिदास और भवभूति, बाण और भर्तृहरि, कथासरित्सागर और हितोपदेश—ये नाम संस्कृतसाहित्य के उत्तमोत्तम कवियों और कृतियों के नाम हैं। संस्कृत प्रारम्भ करनेवाले विद्यार्थियों के लिये इन नामों से घबड़ाने की आवश्यकता नहीं। इस 'संकलन' में सरल से सरल संदर्भ रखे गये हैं जो कि सुन्दर से सुन्दर भी हैं। ये सन्दर्भ इसी उद्देश्य से चुने गये हैं जिसमें विद्यार्थी काव्य-सौन्दर्य का आनन्द तो लें ही किंतु साथ ही साथ भारतीय संस्कृति के महत्त्व से भी परिचित हों। आशा की जाती है कि विद्यार्थीगण उत्साह के साथ इस 'संकलन' का समुचित उपयोग करेंगे।

को. अ. सु. अ.



# १. वाल्मीकिरामायणम्।

## ( क ) अयोध्यावर्णनम्।

कोसलो नाम मुदितः स्फीतो जनपदो महान्।
निविष्टः सरयूतीरे प्रभूतधनधान्यवान्॥
अयोध्या नाम नगरी तत्रासील्लोकविश्रुता।
मनुना मानवेन्द्रेण या पुरी निर्मिता स्वयम्॥
आयता दश च द्वे च योजनानि महापुरी।
श्रीमती त्रीणि विस्तीर्णा सुविभक्तमहापथा॥
राजमार्गेण महता सुविभक्तेन शोभिता।
मुक्तपुष्पावकीर्णेन जलसिक्तेन नित्यशः॥
तां तु राजा दशरथो महाराष्ट्रविवर्धनः।
पुरीमावासयामास दिवि देवपतिर्यथा॥
कवाटतोरणवतीं सुविभक्तान्तरापणाम्।
सर्वयन्त्रायुधवतीमुषितां सर्वशिल्पिभिः॥
सूतमागधसंबाधां श्रीमतीमतुलप्रभाम्।
उच्चाट्टालध्वजवतीं शतघ्नीशतसंकुलाम्॥

वधूनाटकसंघैश्च संयुक्तां सर्वतः पुरीम् ।
उद्यानाम्रवणोपेतां महतीं सालमेखलाम् ॥
दुर्गगंभीरपरिखां दुर्गामन्यैर्दुरासदाम् ।
वाजिवारणसंपूर्णां गोभिरुष्ट्रैः खरैस्तथा ॥
सामन्तराजसंघैश्च बलिकर्मभिरावृताम् ।
नानादेशनिवासैश्च वणिग्भिरुपशोभिताम् ॥

( वा. रा. १. ५ ५—१४ )

## ( ख ) राजा दशरथः ।

तस्यां पुर्यामयोध्यायां वेदवित् सर्वसंग्रहः ।
दीर्घदर्शी महातेजाः पौरजानपदप्रियः ॥
इक्ष्वाकूणामतिरथो यज्वा धर्मरतो वशी ।
महर्षिकल्पो राजर्षिस्त्रिषु लोकेषु विश्रुतः ॥
बलवान्निहतामित्रो मित्रवान् विजितेन्द्रियः ।
धनैश्च संचयैश्चान्यैः शक्रवैश्रवणोपमः ॥
यथा मनुर्महातेजा लोकस्य परिरक्षिता ।
तथा दशरथो राजा वसञ्जगदपालयत् ॥
तेन सत्याभिसंधेन त्रिवर्गमनुतिष्ठता ।
पालिता सा पुरी श्रेष्ठा इन्द्रेणेवामरावती ॥
तस्मिन् पुरवरे हृष्टा धर्मात्मानो बहुश्रुताः ।
नरास्तुष्टा धनैः स्वैः स्वैरलुब्धाः सत्यवादिनः ॥

नाल्पसंनिचयः कश्चिदासीत्तस्मिन् पुरोत्तमे ।
कुटुंबी यो ह्यसिद्धार्थोऽगवाश्वधनधान्यवान् ॥
कामी वा न कदर्यो वा नृशंसः पुरुषः क्वचित् ।
द्रष्टुं शक्यमयोध्यायां नाविद्वान् न च नास्तिकः ॥
सर्वे नराश्च नार्यश्च धर्मशीलाः सुसंगताः ।
उदिताः शीलवृत्ताभ्यां महर्षय इवामलाः ॥
स तेनेक्ष्वाकुनाथेन पुरी सुपरिरक्षिता ।
यथा पुरस्तान्मनुना मानवेन्द्रेण धीमता ॥
योधानामग्निकल्पानां पेशलानाममर्षिणाम् ।
संपूर्णा कृतविद्यानां गुहा केसरिणामिव ॥
तां पुरीं स महातेजा राजा दशरथो महान् ।
शशास शमितामित्रो नक्षत्राणीव चन्द्रमाः ॥
तां सत्यनामां दृढतोरणार्गलां गृहैर्विचित्रैरुपशोभितां शिवां ।
पुरीमयोध्यां नृपसिंहसंकुलां शशास वै शक्रसमो महीपतिः ॥

( वा. रा. १. ६. १–९, २०–२१, २७–२८ )

## ( ग ) गङ्गावतरणम् ।

अथ संवत्सरे पूर्णे सर्वलोकनमस्कृतः ।
उमापतिः पशुपती राजानमिदमब्रवीत् ॥
प्रीतस्तेऽहं नरश्रेष्ठ करिष्यामि तव प्रियम् ।
शिरसा धारयिष्यामि शैलराजसुतामहम् ॥

ततो हैमवती ज्येष्ठा सर्वलोकनमस्कृता।
तदा सा सुमहद् रूपं कृत्वा वेगं च दुःसहम्॥
आकाशादपतद् गङ्गा शिवे शिवशिरस्युत।
अचिन्तयच्च सा देवी गङ्गा परमदुर्धरा॥
विशाम्यहं हि पातालं स्रोतसा गृह्य शङ्करम्।
तस्या वलेपनं ज्ञात्वा क्रुद्धस्तु भगवान् हरः॥
तिरोभावयितुं बुद्धिं चक्रे त्रिणयनस्तदा।
सा तस्मिन् पतिता पुण्या पुण्ये रुद्रस्य मूर्धनि॥
हिमवत्प्रतिमे राम जटामण्डलगह्वरे।
सा कथं चिन्महीं गन्तुं नाशक्नोद्यत्नमास्थिता॥
नैव निर्गमनं लेभे जटामण्डलमोहिता।
तत्रैवाबम्भ्रमद्देवी संवत्सरगणान् बहून्॥
तामपश्यत् पुनस्तत्र तपः परममास्थितः।
स तेन तोषितश्चाभूद् अत्यर्थं रघुनन्दन॥
विससर्ज ततो गङ्गां हरो बिन्दुसरः प्रति॥
भगीरथोऽपि राजर्षिर्दिव्यं स्यन्दनमास्थितः।
प्रायादग्रे महातेजास्तं गङ्गा पृष्ठयोऽन्वगात्॥
देवाः सप्तर्षिगणाः सर्वे दैत्यदानवराक्षसाः।
गन्धर्वयक्षप्रवराः सकिन्नरमहोरगाः॥
सर्वाश्चाप्सरसो राम भगीरथरथानुगाम्।
गङ्गामन्वगमन् प्रीताः सर्वे जलचराश्च ये।
यतो भगीरथो राजा ततो गङ्गा यशस्विनी।

जगाम सरितां श्रेष्ठा सर्वपापप्रणाशिनी ॥
ततो हि यजमानस्य जह्नोरद्भुतकर्मणः ।
गङ्गा संप्लावयामास यज्ञवाटं महात्मनः ॥
तस्या वलेपनं ज्ञात्वा क्रुद्धो यज्वा तु राघव ।
अपिबच्च जलं सर्वं गङ्गायाः परमाद्भुतम् ॥
ततो देवाः सगन्धर्वाः ऋषयश्च सुविस्मिताः ।
पूजयन्ति महात्मानं जह्नुं पुरुषसत्तमम् ॥
गङ्गां चानुनयन्ति स्म दुहितृत्वे महात्मनः ।
ततस्तुष्टो महातेजाः श्रोत्राभ्यामसृजत् पुनः ॥
तस्माज्जह्नुसुता गङ्गा प्रोच्यते जाह्नवीति च ।
जगाम च पुनर्गङ्गा भगीरथरथानुगा ॥
सागरं चापि संप्राप्ता सा सरित्प्रवरा तदा ।
रसातलमुपागच्छत् सिद्ध्यर्थं तस्य कर्मणः ॥
भगीरथोऽपि राजर्षिर्गङ्गामादाय यत्नतः ।
पितामहान् भस्मकृतानपश्यद्दीनचेतनः ॥
अथ तद्भस्मनां राशिं गङ्गासलिलमुत्तमम् ।
प्लावयद्धूतपाप्मानः स्वर्गं प्राप्ता रघूत्तम ॥

(वा. रा. १. ४३. ३–१२. ३२–४३ )

## ( घ ) पतिव्रताध्यवसायः ।

एवमुक्ता तु वैदेही प्रियार्हा प्रियवादिनी ।
प्रणयादेव संक्रुद्धा भर्तारमिदमब्रवीत् ॥

किमिदं भाषसे राम वाक्यं लघुतया ध्रुवम् ।
त्वया यदपहास्यं मे श्रुत्वा नरवरात्मज ॥
आर्यपुत्र पिता माता भ्राता पुत्रस्तथा स्नुषा ।
स्वानि पुण्यानि भुंजानाः स्वं स्वं भाग्यमुपासते ॥
भर्तुर्भाग्यं तु भार्यैका प्राप्नोति पुरुषर्षभ ।
अतश्चैवाहमादिष्टा वने वस्तव्यमित्यपि ॥
न पिता नात्मजो नात्मा न माता न सखीजनः ।
इह प्रेत्य च नारीणां पतिरेको गतिः सदा ॥
यदि त्वं प्रस्थितो दुर्गं वनमद्यैव राघव ।
अग्रतस्ते गमिष्यामि मृद्नती कुशकंटकान् ॥
ईर्ष्यारोषौ बहिष्कृत्य पीतशेषमिवोदकम् ।
नय मां वीर विस्रब्धः पापं मयि न विद्यते ॥
प्रासादाग्रैर्विमानैर्वा वैहायसगतेन वा ।
सर्वावस्थागता भर्तुः पादच्छाया विशिष्यते ॥
अनुशिष्टास्मि मात्रा च पित्रा च विविधाश्रयम् ।
नास्मि संप्रति वक्तव्या वर्तितव्यं यथा मया ॥
अहं दुर्गं गमिष्यामि वनं पुरुषवर्जितम् ।
नानामृगगणाकीर्णं शार्दूलवृकसेवितम् ॥
सुखं वने निवत्स्यामि यथैव भवने पितुः ।
अचिन्तयन्ती त्रींल्लोकांश्चिन्तयन्ती पतिव्रतम् ॥
शुश्रूषमाणा ते नित्यं नियता ब्रह्मचारिणी ।
सह रम्ये त्वया वीर वनेषु मधुगन्धिषु ॥

अहं गमिष्यामि वनं सुदुर्गमं मृगायुतं वानरवारणैर्युतम् ।
वने निवत्स्यामि यथा पितुर्गृहे तवैव पादावुपगृह्य संयता ॥
अनन्यभावामनुरक्तचेतसं त्वया वियुक्तां मरणाय निश्चिताम् ।
नयस्व मां साधु कुरुष्व याचनां न ते मयातो गुरुताभविष्यति॥
तथा ब्रुवाणामपि धर्मवत्सलो न च स्म सीतां नृवरो निनीषति।
उवाच सीतां बहु संनिवर्तने वने निवासस्य च दुःखितां प्रति ॥
( वा. रा. २. २७. १-१२,२१-२३ )

# २. महाभारतम् ।

## यक्षयुधिष्ठिरसंवादः ।

यक्षः—किंस्विदादित्यमुन्नयति के च तस्याभितश्चराः ।
कश्चैनमस्तं नयति कस्मिंश्च प्रतितिष्ठति ॥ १ ॥
युधि.—ब्रह्मादित्यमुन्नयति देवास्तस्याभितश्चरा ।
धर्मस्तमस्तं नयति सत्ये च प्रतितिष्ठति ॥ २ ॥
यक्षः—केन स्विच्छ्रोत्रियो भवति केन स्विद् विन्दते महत् ।
केनाद्वितीयो भवति राजन् केन च बुद्धिमान् ॥३॥
युधि.—श्रुतेन श्रोत्रियो भवति तपसा विन्दते महत् ।
धृत्या सहायवान् भवति बुद्धिमान् वृद्धसेवया॥४॥
यक्षः—किं ब्राह्मणानां देवत्वं कश्च धर्मस्सतामिव ।
कश्चैषां मानुषो भावः किमेषामसतामिव ॥ ५ ॥

युधि.—स्वाध्याय एषां देवत्वं तप एषां सतामिव ।
मरणं मानुषो भावः परिवादोऽसतामिव ॥ ६ ॥

यक्षः—किं स्विदापततां श्रेष्ठं किं स्विन्निपततां वरम् ।
किं स्वित् प्रतिष्ठमानानां किं स्वित् प्रवदतां वरम् ॥७॥

युधि.—वर्षमापततां श्रेष्ठं बीजं निपततां वरम् ।
गावः प्रतिष्ठमानानां पुत्रः प्रवदतां वरः ॥ ८ ॥

यक्षः—किंस्विद् गुरुतरं भूमेः किंस्विदुच्चतरं च स्वात् ।
किं स्विच्छ्रीघ्रतरं वायोःकिंस्विद्बहुतरी नृणाम् ॥९॥

युधि.—माता गुरुतरा भूमेः, पिता उच्चतरश्च स्वात् ।
मनश्शीघ्रतरं वायोः, चिन्ता बहुतरी नृणाम् ॥१०॥

यक्षः—किंस्वित् प्रवसतो मित्रं किंस्विन्मित्रं गृहे सतः ।
आतुरस्यतु किं मित्रं, किं स्विन्मित्रं मरिष्यतः ॥११॥

युधि.—विद्या प्रवसतो मित्रं, भार्या मित्रं गृहे सतः ।
आतुरस्य भिषङ् मित्रं दानं मित्रं मरिष्यतः ॥१२॥

यक्षः —किंस्विदेकपदं धर्म्यं किंस्विदेकपदं यशः ।
किंस्विदेकपदं स्वर्ग्यं किंस्विदेकपदं सुखम् ॥ १३ ॥

युधि.—दाक्ष्यमेकपदं धर्म्यं दानमेकपदं यशः ।
सत्यमेकपदं स्वर्ग्यं शीलमेकपदं सुखम् ॥ १४ ॥

यक्षः—किंस्विदात्मा मनुष्यस्य किंस्विद्दैवकृतः सखा ।
अस्योपजीवनं किंस्वित् किं स्विदस्य परायणम् ॥१५॥

युधि.—पुत्र आत्मा मनुष्यस्य भार्या दैवकृतस्सखा ।
उपजीवनं तु पर्जन्यो दानमस्य परायणम् ॥१६॥

यक्षः—किं स्विद्धर्मात् परं लोके कश्च धर्मस्सदाफलः ।
किं नियम्य न शोचन्ति कैश्च सन्धिर्न जीर्यते॥१७॥

युधि.—आनृशंस्यं परो धर्मः, त्रेताधर्मस्सदाफलः ।
मनोयस्य न शोचन्ति, सन्धिस्सद्भिर्न जीर्यते॥१८॥

यक्षः—किं नु हित्वा प्रियो भवति, किं नु हित्वा न शोचति ।
किंनुहित्वाऽर्थवान्भवति, किंनुहित्वासुखीभवेत् १९

युधि.—मानं हित्वा प्रियो भवति, क्रोधं हित्वा न शोचति ।
कामंहित्वाऽर्थवान्भवति, लोभंहित्वा सुखी भवेत् २०

यक्षः—केन स्विदावृतो लोकः केन स्विन्न प्रकाशते ।
केनत्यजति मित्राणि केन स्वर्गं न गच्छति॥२१॥

युधि.—अज्ञानेनावृतो लोकस्तमसा न प्रकाशते ।
लोभात्त्यजति मित्राणि संगात् स्वर्गं न गच्छति २२॥

यक्षः—कथं मृतस्स्यात् पुरुषः कथं राष्ट्रं मृतं भवेत् ।
श्राद्धं मृतं कथं च स्यात् कथं यज्ञो मृतो भवे॥२३॥

युधि.—मृतो दरिद्रः पुरुषो मृतं राष्ट्रमराजकम् ।
मृतमश्रोत्रियं श्राद्धं मृतो यज्ञस्त्वदक्षिणः ॥२४॥

यक्षः—व्याख्याता मे त्वया प्रश्ना यथातत्त्वं परन्तप ।
पुरुषं त्विदानीं व्याख्याहि यश्च सर्वधनीश्वरः२५॥

युधि.—दिवं स्पृशति भूमिं च शब्दः पुण्येन कर्मणा ।
यावत् स शब्दो भवति तावत् पुरुष उच्यते ॥२६॥
तुल्ये प्रियाप्रिये यस्य सुखदुःखे तथैव च ।
अतीतानागते चोभे स वै पुरुष उच्यते ॥ २७ ॥

भूतभव्यभविष्येषु निस्स्पृहश्शान्तमानसः ।
सुप्रसन्नस्सदा योगी स वै सर्वधनीश्वरः ॥२८॥
---श्रीमन्महाभारतवनपर्वणः ।

# ३. श्रीमद्भगवद्गीता

## ( क ) आत्मस्वरूप-वर्णनम् ।

देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा ।
तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥ १ ॥
य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥ २ ॥
न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः ।
अजोनित्यःशाश्वतोऽयं पुराणोनहन्यते हन्यमाने शरीरे ॥३॥
वेदाविनाशिनं नित्यं य एनमजमव्ययम् ।
कथं स पुरुषः पार्थ कं घातयति हन्ति कम् ॥ ४ ॥
वासांसि जीर्णानियथाविहाय, नवानि गृह्णातिनरोऽपराणि।
तथाशरीराणिविहायजीर्णान्यन्यानिसंयाति नवानिदेही ५
नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥ ६ ॥
देही नित्यमवध्योऽयं देहे सर्वस्य भारत ।
तस्मात् सर्वाणि भूतानि न त्वं शोचितुमर्हसि ॥ ७ ॥

## ( ख ) कर्मयोगः ।

कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥ ८ ॥
योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय ।
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥ ९ ॥

## ( ग ) स्थितप्रज्ञलक्षणम् ।

प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतान् ।
आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥ १० ॥
दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।
वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥ ११ ॥
यः सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम् ।
नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥ १२ ॥
यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ १३ ॥
यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः ।
इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥ १४ ॥
तानि सर्वाणि संयम्य युक्तः आसीत मत्परः ।
वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥ १५ ॥

## ( घ ) अवतारावसरः ।

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत !

अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥ १६ ॥

## ( ङ ) अवतार-प्रयोजनम् ।

परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥ १७ ॥

## ( च ) योगिन आहारादि नियमः ।

नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नुतः ।
न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन ॥ १८ ॥
युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥ १९ ॥

# ४. मनुस्मृतिः ।

| | अध्यायः | श्लोकः |
|---|---|---|
| ( क ) धर्ममूलानि । | | |
| वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् । | | |
| आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ॥ | २ | ६ |
| ( ख ) धर्मस्वरूपम् । | | |
| धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः । | | |
| धीर्विद्या सत्यक्रोधो दशकं धर्मलक्षणम् ॥ | ६ | ९२ |
| अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः । | | |

अध्यायः श्लोकः

एवं सामासिकं धर्मं चातुर्वर्ण्येऽब्रवीन्मनुः ॥ १० ६३

( ग ) आचारः परमो धर्मः ।

आचारः परमो धर्मः श्रुत्युक्तः स्मार्त एव च ।
तस्मादस्मिन्सदा युक्तो नित्यं स्यादात्मवान् द्विजः॥१ १०८
एवमाचरतो दृष्ट्वा धर्मस्य मुनयो गतिम् ।
सर्वस्य तपसो मूलमाचारं जगृहुः परम् ॥ १ ११०

( घ ) धर्मातिक्रमणे दोषः ।

धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः ।
तस्माद्धर्मो न हन्तव्यो मा नो धर्मो हतोऽवधीत्॥८ १५

( ङ ) विद्यार्थिनियमाः ।

वर्जयेन्मधुमांसं च गन्धं माल्यं रसान् स्त्रियः ।
शुक्तानि यानि सर्वाणि प्राणिनां चैव हिंसनम्२ १७७
अभ्यङ्गमञ्जनं चाक्ष्णोरुपानच्छत्रधारणम् ।
कामं क्रोधं च लोभं च नर्तनं गीतवादनम् ॥ २ १७८
द्यूतं च जनवादं च परिवादं तथानृतम् ।
स्त्रीणां च प्रेक्षणालम्भावुपघातं परस्य च ॥ २ १७९
नीचं शय्यासनं चास्य नित्यं स्याद् गुरुसन्निधौ ।
गुरोऽस्तु चक्षुर्विषये न यथेष्टासनो भवेत् ॥ २ १९८
गुरुर्यत्र परीवादो निन्दा वापि प्रवर्तते ।
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ॥२ २००

अध्यायः श्लोकः

( च ) स्त्रीनियमाः ।

बालया वा युवत्या वा वृद्धया वापि योषिता ।
न स्वातन्त्र्येण कर्तव्यं किंचित्कार्यं गृहेष्वपि ॥ ५ १४७
बाल्ये पितुर्वशे तिष्ठेत्पाणिग्राहस्य यौवने ।
पुत्राणां भर्तरि प्रेते न भजेत्स्त्री स्वतन्त्रताम् ॥ ५ १४८
सदा प्रहृष्टया भाव्यं गृहकार्ये च दक्षया ।
सुसंस्कृतोपस्करया व्यये चामुक्तहस्तया ॥ ५ १५०
यस्मै दद्यात्पिता त्वेनां भ्राता वानुमते पितुः ।
तं शुश्रूषेत जीवन्तं संस्थितं च न लङ्घयेत् ॥ ५ १५१
पाणिग्राहस्य साध्वी स्त्री जीवतो वा मृतस्य वा ।
पतिलोकमभीप्सन्ती नाचरेत्किंचिदप्रियम् । ५ १५६
मृते भर्तरि साध्वी स्त्री ब्रह्मचर्ये व्यवस्थिता ।
स्वर्गं गच्छत्यपुत्रापि यथा ते ब्रह्मचारिणः ॥ ५ १६०

( छ ) नारीणां पूजनीयता ।

यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः ।
यत्रैतास्तु न पूज्यन्ते सर्वास्तत्राफलाः क्रियाः ॥ ३ ५६
शोचन्ति जामयो यत्र विनश्यत्याशु तत्कुलम् ।
न शोचन्ति तु यत्रैता वर्द्धते तद्धि सर्वदा ॥ ३ ५७
जामयो यानि गेहानि शपन्त्यप्रतिपूजिताः ।
तानि कृत्याहतानीव विनश्यन्ति समन्ततः ॥ ३ ५८
तस्मादेताः सदा पूज्या भूषणाच्छादनाशनैः ।

अध्यायः श्लोकः

भूतिकामैर्नरैर्नित्यं सत्कारेषूत्सवेषु च ॥ ३ ५९

( ज ) सर्वसाधारणनियमाः ।

कामात्मता न प्रशस्ता न चैवेहास्त्यकामता ।
काम्यो हि वेदाधिगमः कर्मयोगश्च वैदिकः ॥ २ २
संतोषं परमास्थाय सुखार्थी संयतो भवेत् ।
संतोषमूलं हि सुखं दुःखमूलं विपर्ययः ॥ ४ १२
इन्द्रियाणां विचरतां विषयेष्वपहारिषु ।
संयमे यत्नमातिष्ठेद्विद्वान् यन्तेव वाजिनाम् ॥ २ ८८
इन्द्रियाणां प्रसङ्गेन दोषमृच्छत्यसंशयम् ।
सन्नियम्य तु तान्येव ततः सिद्धिं नियच्छति ॥ २ ९३
न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूयएवाभिवर्धते ॥ २ ९४
न तथैतानि शक्यन्ते सन्नियन्तुमसेवया ।
विषयेषु प्रजुष्टानि यथा ज्ञानेन नित्यशः ॥ २ ९६
श्रुत्वा स्पृष्ट्वा च दृष्ट्वा च भुक्त्वा घ्रात्वा च यो नरः ।
न हृष्यति ग्लायति वा स विज्ञेयो जितेन्द्रियः ॥ २ ९८
वशे कृत्वेन्द्रियग्रामं संयम्य च मनस्तथा ।
सर्वान्संसाधयेदर्थानक्षिण्वन् योगतस्तनुम् ॥ २ १००
नोच्छिष्टं कस्यचिद्दद्यान्नाद्याच्चैव तथान्तरा ।
न चैवात्यशनं कुर्यान्न चोच्छिष्टः क्वचिद् व्रजेत् २ ५६

अध्यायः श्लोकः

अनारोग्यमनायुष्यमस्वर्ग्यं चातिभोजनम् ।
अपुण्यं लोकविद्विष्टं तस्मात्तत् परिवर्जयेत् ॥ २ ५७

अहिंसयैव भूतानां कार्यं श्रेयोऽनुशासनम् ।
वाक् चैव मधुरा श्लक्ष्णा प्रयोज्या धर्ममिच्छता २ १५९

नारुन्तुदः स्यादार्त्तोऽपि न परद्रोहकर्मधीः ।
यथाऽस्योद्विजते वाचा नालोक्यां तामुदीरयेत् २ १६१

ब्राह्मे मुहूर्ते बुध्येत धर्माथौं चानुचिन्तयेत् ।
कायक्लेशांश्च तन्मूलान्वेदतत्त्वार्थमेव च ॥ ४ ९२

न स्नानमाचरेद् भुक्त्वा नातुरो न महानिशि ।
न वासोभिः सहाजस्रं नाविज्ञाते जलाशये ४ १२९

वैरिणं नोपसेवेत सहायं चैव वैरिणः ।
अधार्मिकं तस्करं च परस्यैव च योषितम् ॥ ४ १३३

न हीदृशमनायुष्यं लोके किंचन विद्यते ।
यादृशं पुरुषस्येह परदारोपसेवनम् ॥ ४ १३४

क्षत्रियं चैव सर्पं च ब्राह्मणं च बहुश्रुतम् ।
नावमन्येत वै भूष्णुः कृशानपि कदाचन ॥ ४ १३५

नात्मानमवमन्येत पूर्वाभिरसमृद्धिभिः ।
आमृत्योः श्रियमन्विच्छेन्नैनां मन्येत दुर्लभाम् ४ १३७

सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम् ।
प्रियं च नानृतं ब्रूयादेष धर्मः सनातनः ॥ ४ १३८

भद्रं भद्रमिति ब्रूयाद्भद्रमित्येव वा वदेत् ।

| | अध्यायः | श्लोकः |
|---|---|---|
| शुष्कवैरं विवादं च न कुर्यात्केनचित्सह ॥ | ४ | १३९ |
| यद्यत्परवशं कर्म तत्तद्यत्नेन वर्जयेत् । | | |
| यद्यदात्मवशं तु स्यात्तत्तत्सेवेत यत्नतः ॥ | ४ | १५९ |
| सर्वं परवशं दुःखं सर्वमात्मवशं सुखम् । | | |
| एतद्विद्यात्समासेन लक्षणं सुखदुःखयोः ॥ | ४ | १६० |
| यत्कर्म कुर्वतोऽस्य स्यात्परितोषोऽन्तरात्मनः । | | |
| तत्प्रयत्नेन कुर्वीत विपरीतं तु वर्जयेत् ॥ | ४ | १६१ |
| दृष्टिपूतं न्यसेत्पादं वस्त्रपूतं जलं पिबेत् । | | |
| सत्यपूतां वदेद्वाचं मनःपूतं समाचरेत् ॥ | ६ | ४६ |
| अतिवादांस्तितिक्षेत नावमन्येत कंचन । | | |
| न चेमं देहमाश्रित्य वैरं कुर्वीत केनचित् ॥ | ६ | ४७ |
| क्रुद्ध्यन्तं न प्रतिक्रुध्येदाक्रुष्टः कुशलं वदेत् । | | |
| सप्तद्वारावकीर्णां च न वाचमनृतां वदेत् ॥ | ६ | ४८ |
| ( झ ) शासकावश्यकता । | | |
| अराजके हि लोकेऽस्मिन्सर्वतो विद्रुते भयात् । | | |
| रक्षार्थमस्य सर्वस्य राजानमसृजत्प्रभुः ॥ | ७ | ३ |
| ( ञ ) राजद्वेषनिन्दा । | | |
| एकमेव दहत्यग्निर्नरं दुरुपसर्पिणम् । | | |
| कुलं दहति राजाग्निः सपशुद्रव्यसंचयम् ॥ | ७ | ९ |
| तं यस्तु द्वेष्टि संमोहात्स विनश्यत्यसंशयम् । | | |
| तस्य ह्याशु विनाशाय राजा प्रकुरुते मनः ॥ | ७ | १२ |

अध्यायः श्लोकः

( ट ) राजधर्मस्यानुसरणीयता ।

तस्माद्धर्मं यमिष्टेषु स व्यवस्येन्नराधिपः ।
अनिष्टं चाप्यनिष्टेषु तं धर्मं न विचालयेत् ॥ ७ १३

# ५. याज्ञवल्क्यस्मृतिः

अध्यायः श्लोकः

( क ) धर्ममूलम् ।

श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
सम्यकसंकल्पजः कामो धर्ममूलमिदं स्मृतम् ॥ १ ७

( ख ) धर्मस्वरूपम् ।

सत्यमस्तेयमक्रोधो ह्रीः शौचं धीर्धृतिर्दमः ।
संयतेन्द्रियता विद्या धर्मः सर्व उदाहृतः ॥ ३ ६६

( ग ) सर्वकर्मसु आत्मदर्शनस्य प्राधान्यम् ।

इज्याचारदमाहिंसादानस्वाध्यायकर्मणाम् ।
अयं तु परमो धर्मो यद्योगेनाऽऽत्मदर्शनम् ॥ १ ८

( घ ) विद्यार्थिनियमाः

मधुमांसञ्जनोच्छिष्टशुक्तस्त्रीप्राणिहिंसनम् ।
भास्करालोकनाश्लीलपरिवादांश्च वर्जयेत् ॥ १ ३३

( ङ ) सर्वसाधारणधर्मः ।

अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः ।

अध्यायः श्लोकः

दानं दमो दया क्षान्तिः सर्वेषां धर्मसाधनम् ॥ १ १२२
न संशयं प्रपद्येत नाकस्मादप्रियं वदेत् ।
नाहितं नानृतं चैव न स्तेनः स्यान्न वाधुषी । १ १३२
परशय्यासनोद्यानगृहयानानि वर्जयेत् ।
अदत्तान्यग्निहीनस्य नान्नमद्यादनापदि ॥ १ १६०
श्रान्तसंवाहनं रोगिपरिचर्या सुरार्चनम् ।
पादशौचं द्विजोच्छिष्टमार्जनं गोप्रदानवत् ॥ १ २०६

( च ) शासकगुणाः ।

महोत्साहः स्थूललक्षः कृतज्ञो वृद्धसेवकः ।
विनीतः सत्वसम्पन्नः कुलीनः सत्यवाक्शुचिः ॥१ ३०६
अदीर्घसूत्रः स्मृतिमानक्षुद्रोऽपरुषस्तथा ।
धार्मिकोऽव्यसनश्चैव प्राज्ञः शूरो रहस्यवित् ॥ १ ३१०
स्वरंध्रगोप्ताऽऽन्वीक्षिक्यां दण्डनीत्यां तथैव च ।
विनीतस्त्वथ वार्तायां त्रय्यां चैव नराधिपः ॥ १ ३११

( छ ) राजधर्मः ।

ब्राह्मणेषु क्षमी स्निग्धेष्वजिह्मः क्रोधनोऽरिषु ।
स्याद्राजा भृत्यवर्गेषु प्रजासु च यथा पिता ॥ १ ३३४
पुण्यात्षड्भागमादत्ते न्यायेन परिपालयन् ।
सर्वदानाधिकं यस्मात्प्रजानां परिपालनम् ॥ १ ३३५
चाटतस्करदुर्वृत्तमहासाहसिकादिभिः ।
पीड्यमानाः प्रजा रक्षेत्कायस्थैश्च विशेषतः ॥ १ ३२६

अध्यायः श्लोकः

अरक्ष्यमाणाः कुर्वन्ति यत्किंचित्किल्बिषं प्रजाः ।
तस्मात्तु नृपतेरर्धं यस्ताद्गृह्णात्यसौ करान् ॥ १ ३३७
ये राष्ट्राधिकृतास्तेषां चारैर्ज्ञात्वा विचेष्टितम् ।
साधून्संमानयेद्राजा विपरीतांस्तु घातयेत् ॥ १ ३३८
उत्कोचजीविनो द्रव्यहीनान्कृत्वा विवासयेत् ।
सद्दानमानसत्काराञ्श्रोत्रियान्वासयेत्सदा ॥ १ ३३९
अन्यायेन नृपो राष्ट्रात्स्वकोशं योऽभिवर्धयेत् ।
सोऽचिराद्विगतश्रीको नाशमेति सबान्धवः ॥ १ ३४०
प्रजापीडनसंतापात्समुद्भूतो हुताशनः ।
राज्ञःश्रियं कुलं प्राणांश्चाऽदग्ध्वा न निवर्तते ॥ १ ३४१
व्यवहारान्नृपः पश्येद्विद्वद्भिर्ब्राह्मणैः सह ।
धर्मशास्त्रानुसारेण क्रोधलोभविवर्जितः ॥ २ १
श्रुताध्ययनसंपन्ना धर्मज्ञाः सत्यवादिनः ।
राज्ञा सभासदः कार्या रिपौ मित्रे च ये समाः ॥ २ २
अपश्यता कार्यवशाद्व्यवहारान्नृपेण तु ।
सभ्यैः सह नियोक्तव्यो ब्राह्मणः सर्वधर्मवित् ॥ २ ३
रागाल्लोभ्द्भयाद्वापि स्मृत्यपेतादिकारिणः ।
सभ्याः पृथक्पृथग्दण्ड्या विवादाद्विगुणं दमम् ॥ २ ४

( ज ) संगीतादेः मोक्षमार्गप्रापकत्वम् ।

वीणावादनतत्त्वज्ञः श्रुतिजातिविशारदः ।
तालज्ञश्चाप्रयत्नेन मोक्षमार्गं नियच्छति ॥ ३ ११५

अध्यायः श्लोकः

( झ ) निन्द्यकर्माणि ।

पुरुषोऽनृतवादी च पिशुनः परुषस्तथा ।
अनिबद्धप्रलापी च मृगपक्षिषु जायते ॥ ३ १३५
अदत्तादाननिरतः परदारोपसेवकः ।
हिंसकश्चाविधानेन स्थावरेष्वभिजायते । ३ १३६
परद्रव्याण्यभिध्यायंस्तथाऽनिष्टानि चिन्तयन् ।
वितथाभिनिवेशी च जायतेऽन्त्यासु योनिषु ३ १३४

# ६. भासः ।

## दुर्योधनस्य मन्त्रणा ।

( ततः प्रविशति काञ्चुकीयः )

काञ्चुकीयः—भो भोः प्रतिहाराधिकृताः ! महाराजो दुर्योधनः समाज्ञापयति—अद्य सर्वपार्थिवैः सह मन्त्रयितुमिच्छामि । तदाहूयन्तां सर्वे राजान इति ( परिक्रम्यावलोक्य ) अये अयं महाराजो दुर्योधन इत एवाभिवर्तते । य एषः ।

श्यामो युवा सितदुकूलकृतोत्तरीयः
सच्छत्रचामरवरो रचिताङ्गरागः ।
श्रीमान् विभूषणमणिद्युतिरञ्जिताङ्गो

नक्षत्रमध्य इव पर्वगतः शशाङ्कः ॥

( ततः प्रविशति यथानिर्दिष्टो दुर्योधनः )

दुर्योधनः—उद्धतरोषमिव मे हृदयं सहर्षं
प्राप्तं रणोत्सवमिमं सहसा विचिन्त्य ।
इच्छामि पाण्डवबले वरवारणाना
मुत्कृत्तदन्तमुसलानि मुखानि कर्तुम् ॥

काञ्चुकीयः—जयतु महाराजः । महाराजशासनात् समानीतं सर्वराजमण्डलम् ।

दुर्योधनः—सम्यक् कृतम् । प्रविश त्वमरोधनम् ।

काञ्चुकीयः—यदाज्ञापयति महाराजः। (निष्क्रान्तः)

दुर्योधनः—आर्यौ वैकर्णवर्षदेवौ ! उच्यताम्—अस्ति ममैकादशाक्षौहिणीबलसमुदयः । अस्य कः सेनापतिर्भवितुमर्हति । किं किमाहतुर्भवन्तौ महान् खल्वयमर्थः । मन्त्रयित्वा वक्तव्यमिति । सदृशमेतत् । तदागम्यताम् मन्त्रशालामेव प्रविशामः । आचार्य ! अभिवादये । प्रविशतु भवान् मन्त्रशालाम् । पितामह ! अभिवादये । प्रविशतु भवान् मन्त्रशालाम् । मातुल ! अभिवादये । प्रविशतु भवान् मन्त्रशालाम् । आर्यौ वैकर्णवर्षदेवौ ! प्रविशतां भवन्तौ । भो भोः सर्वक्षत्रियाः । स्वैरं प्रविशन्तु भवन्तः। वयस्य ! कर्ण ! प्रविशामस्तावत् ।

( प्रविश्य )

आचार्य ! एतत कूर्मासनम्, आस्यताम् । पितामह !

एतत् सिंहासनम्, आस्यताम् । मातुल ! एतच्चर्मासनम्, आस्यताम् । आर्यौ वैकर्णवर्षदेवौ ! आसतां भवन्तौ । भो भोः सर्वक्षत्रियाः ! स्वैरमासतां भवन्तः । किमिति किमिति महाराजो नास्त इति । अहो सेवाधर्मः । नन्वय-महमासे । वयस्य कर्ण । त्वमप्यास्स्व । ( उपविश्य ) आर्यौ वैकर्णवर्षदेवौ ! उच्यताम् - अस्ति ममैकादशा-क्षौहिणीबलसमुदयः, अस्य कः सेनापतिर्भवितुमर्हतीति । किमाहतुर्भवन्तौ— अत्र भवान् गान्धारराजो वक्ष्यतीति । भवतु, मातुलेनाभिधीयताम् । किमाह मातुलः — अत्र-भवति गाङ्गेये स्थिते कोऽन्यः सेनापतिर्भवितुमर्हतीति । सम्यगाह मातुलः । भवतु भवतु, पितामह एव भवतु । वयमप्येतदभिलषामः ।

सेनानिनादपटहस्वनशंखनादै-
श्चण्डानिलाहतमहोदधिनादकल्पैः ।
गाङ्गेयमूर्ध्नि पतितैरभिषेकतोयैः
सार्धं पतन्तु हृदयानि नराधिपानाम् ॥

( प्रविश्य )

काञ्चुकीयः—जयतु महाराजः । एष खलु पाण्डव-स्कन्धावारात् दौत्येनागतः पुरुषोत्तमो नारायणः ।

दुर्योधनः—मा तावद् भो बादरायण ! किं किं स कंसभृत्यो दामोदरस्तव पुरुषोत्तमः । स गोपालकस्तव पुरुषोत्तमः । बार्हद्रथापहृतविषयकीर्तिभोगस्तव पुरुषोत्तमः ।

अहो पार्थिवासन्नमाश्रितस्य भृत्यजनस्य समुदाचारः । सगर्वं खल्वस्य वचनम् । आ अपध्वंस ।

काञ्चुकीयः—प्रसीदतु महाराजः । संभ्रमेण समुदाचारो विस्मृतः ( पादयोः पतति । )

दुर्योधनः—संभ्रम इति । आ मनुष्याणामस्त्येव संभ्रमः । उत्तिष्ठोत्तिष्ठ ।

काञ्चुकीयः—अनुगृहीतोऽस्मि ।

दुर्योधनः—इदानीं प्रसन्नोस्मि । क एष दूतः प्राप्तः ।

काञ्चुकीयः—दूत प्राप्तः केशवः ।

दुर्योधनः—केशव इति । एवमेष्टव्यम् । अयमेव समुदाचारः । भो भो राजानः ! दौत्येनागतस्य केशवस्य किं युक्तम् । किमाहुर्भवन्तः—अर्घ्यप्रदानेन पूजितव्यः केशव इति । न मे रोचते । ग्रहणमस्यात्र हितं पश्यामि ।

ग्रहणमुपगते तु वासभद्रे हृतनयना इव पाण्डवा भवेयुः । गतिमतिरहितेषु पाण्डवेषु क्षितिरखिलापि भवेन्ममासपत्ना ।

अपि च योऽत्र केशवस्य प्रत्युत्थास्यति स मया द्वादशसुवर्णभारेण दण्ड्यः । तदप्रमत्ता भवन्तु भवन्तः । कोनु खलु ममाऽप्रत्युत्थानस्योपायः ? हन्त दृष्ट उपायः ! बादरायण ! आनीयतां स चित्रपटो ननु यत्र द्रौपदीकेशाम्बरावकर्षणमालिखितम् । ( अपवार्य ) तस्मिन् दृष्टिविन्यासं कुर्वन् नोत्थास्यामि केशवस्य ।

काञ्चुकीयः— यदाज्ञापयति महाराजः । ( निष्क्रम्य

प्रविश्य ) जयतु महाराजः । अयं स चित्रपटः ।

दुर्योधनः—ममाग्रतः प्रसारय ।

काञ्चुकीयः—यदाज्ञापयति महाराजः। (प्रसारयति)

दुर्योधनः—अहो दर्शनीयोऽयं चित्रपटः । एष दुःशासनो द्रौपदीं केशहस्ते गृहीतवान्। एषा खलु द्रौपदी—

दुःशासनपरामृष्टा संभ्रमोत्फुल्ललोचना ।
राहुवक्त्रान्तरगता चन्द्रलेखेव शोभते ॥

एष दुरात्मा भीमः सर्वराजसमक्षमवमानितां द्रौपदीं दृष्ट्वा प्रवृद्धामर्षः सभास्तम्भं तुलयति । अहो अस्य वर्णाढ्यता ! अहो भावोपपन्नता ! अहो युक्तलेखता ! सुव्यक्तमालिखितोऽयं चित्रपटः । प्रीतोऽस्मि । कोऽत्र ?

काञ्चुकीयः—जयतु महाराजः ।

दुर्योधनः – बादरायण आनीयतां स विहगवाहनमात्रविस्मितो दूतः ।

काञ्चुकीय —यदाज्ञापयति महाराजः। (निष्क्रान्तः)

दुर्योधनः—वयस्य कर्ण !

प्राप्तः किलाद्य वचनादिह पाण्डवानां
दौत्येन भृत्य इव कृष्णमतिः स कृष्णः ।
श्रोतुं सखे त्वमपि सज्जय कर्ण ! कर्णौ
नारीमृदूनि वचनानि युधिष्ठिरस्य ॥

भासकृतात् दूतवाक्यात्

———

# ७. कालिदासः ।

## ( क ) कुमारसम्भवम्--द्वितीयसर्गात्

### वागीशस्तुतिः ।

जगद्योनिरयोनिस्त्वं जगदन्तो निरन्तकः ।
जगदादिरनादिस्त्वं जगदीशो निरीश्वरः ॥ १ ॥
आत्मानमात्मना वेत्सि सृजस्यात्मानमात्मना ।
आत्मना कृतिना च त्वमात्मन्येव प्रलीयसे ॥ २ ॥
द्रवः संघातकठिनः स्थूलः सूक्ष्मो लघुर्गुरुः ।
व्यक्तो व्यक्तेतरश्चासि प्राकाम्यं ते विभूतिषु ॥ ३ ॥
उद्घातः प्रणवो यासां न्यायैस्त्रिभिरुदीरणम् ।
कर्म यज्ञः फलं स्वर्गस्तासां त्वं प्रभवो गिराम् ॥ ४ ॥
त्वामामनन्ति प्रकृतिं पुरुषार्थप्रवर्तिनीम् ।
तद्दर्शिनमुदासीनं त्वामेव पुरुषं विदुः ॥ ५ ॥
त्वं पितॄणामपि पिता देवानामपि देवता ।
परतोऽपि परश्चासि विधाता वेधसामपि ॥ ६ ॥
त्वमेव हव्यं होता च भोज्यं भोक्ता च शाश्वतः ।
वेद्यं च वेदिता चासि ध्याता ध्येयं च यत्परम् ॥ ७ ॥

## कुमारसम्भवम्--तृतीयसर्गात् ।

### उमादर्शने हरस्य धैर्यलोपः कामस्य च कार्यसिद्धिः

स्मरस्तथाभूतमयुग्मनेत्रं पश्यन्नदूरान्मनसाप्यधृष्यम् ।
नालक्षयत्साध्वससन्नहस्तः स्रस्तं शरं चापमपि स्वहस्तात् ॥ १ ॥

निर्वाणभूयिष्ठमथास्य वीर्यं संधुक्षयन्तीव वपुर्गुणेन ।
अनुप्रयाता वनदेवताभ्यामदृश्यत स्थावरराजकन्या ॥ २ ॥
अशोकनिर्भर्त्सितपद्मरागमाकृष्टहेमद्युतिकर्णिकारम् ।
मुक्ताकलापीकृतसिन्दुवारं वसन्तपुष्पाभरणं वहन्ती ॥ ३ ॥
आवर्जिता किञ्चिदिव स्तनाभ्यां वासो वसाना तरुणार्करागम्
पर्याप्तपुष्पस्तबकावनम्रा संचारिणी पल्लविनी लतेव ॥ ४ ॥
तां वीक्ष्य सर्वावयवानवद्यां रतेरपि ह्रीपदमादधानाम् ।
जितेन्द्रिये शूलिनि पुष्प चापः स्वकार्यसिद्धिं पुनराशशंसे॥ ५॥
भविष्यतः पत्युरुमा च शम्भोः समाससाद प्रतिहारभूमिम् ।
योगात्स चान्तः परमात्मसंज्ञं दृष्ट्वा परं ज्योतिरुपारराम॥ ६॥
उमापि नीलालकमध्यशोभि विस्रंसयन्ती नवकर्णिकारकम् ।
चकार कर्णच्युतपल्लवेन मूर्ध्ना प्रणामं वृषभध्वजाय ॥ ७ ॥
अनन्यभाजं पतिमाप्नुहीति सा तथ्यमेवाभिहिता भवेन ।
न हीश्वरव्याहृतयः कदाचित्पुष्णन्ति लोकेविपरीतमर्थम्॥ ८॥
कामस्तु बाणावसरं प्रतीक्ष्य पतङ्गवद्वह्निमुखं विविक्षुः ।
उमासमक्षं हरबद्धलक्ष्यः शरासनज्यां मुहुराममर्श ॥ ९ ॥
अथोपनिन्ये गिरिशाय गौरी तपस्विने ताम्ररुचा करेण ।
विशोषितां भानुमतो मयूखैर्मन्दाकिनीपुष्करबीजमाला १०॥
प्रतिग्रहीतुं प्रणयिप्रियत्वात्त्रिलोचनस्तामुपचक्रमे च ।
संमोहनं नाम च पुष्पधन्वा धनुष्यमोघं समधत्त बाणम् ११॥

( ख ) मेघदूतम्—पूर्वमेघः

मन्दं मन्दं नुदति पवनाश्चानुकूलो यथा त्वां

वामश्चायं नदति मधुरं चातकस्ते सगन्धः ।
गर्भाधानक्षणपरिचयान्नूनमाबद्धमालाः ।
सेविष्यन्ते नयनसुभगं खे भवन्तं बलाकाः ॥ १ ॥
संपश्यामि द्रुतमपि सखे मत्प्रियार्थं यियासोः
कालक्षेपं ककुभसुरभौ पर्वते पर्वते ते ।
शुक्लापाङ्गैः सजलनयनैः स्वागतीकृत्य केकाः
प्रत्युद्यातः कथमपि भवान् गंतुमाशु व्यवस्येत् ॥ २ ॥
तस्मिन् काले नयनसलिलं योषितां खण्डितानाम्
शान्तिं नेयं प्रणयिभिरतो वर्त्म भानोस्त्यजाशु ।
प्रालेयास्रं कमलवदनात् सोऽपि हर्तुं नलिन्याः ।
प्रत्यावृत्तस्त्वयि कररुधि स्यादनल्पाभ्यसूयः ॥ ३ ॥

( ग ) रघुवंशम् ।

सोऽहमाजन्मशुद्धानामाफलोदयकर्मणाम् ।
आसमुद्रक्षितीशानामानाकरथवर्त्मनाम् । ॥ १ ॥
यथाविधिहुताग्नीनां यथाकामार्चितार्थिनाम् ।
यथापराधदण्डानां यथाकालप्रबोधिनाम् ॥ २ ॥
त्यागाय संभृतार्थानां सत्याय मितभाषिणाम् ।
यशसे विजिगीषूणां प्रजायै गृहमेधिनाम् ॥ ३ ॥
शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम् ।
वार्द्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम् ॥ ४ ॥
रघूणामन्वयं वक्ष्ये तनुवाग्विभवोऽपि सन् ।

## रघुवंशम्—द्वादशासर्गादुद्धृतं रामस्य वनगमनं तदनन्तरं भरतेन पादुकायाचनम् ।

पित्रा दत्तां रुदन्रामः प्राङ् महीं प्रयत्यपद्यत ।
पश्चाद्वनाय गच्छेति तदाज्ञां मुदितोऽग्रहीत् ॥ १ ॥
दधतो मङ्गलक्षौमे वसानस्य च वल्कले ।
ददृशुर्विस्मितास्तस्य मुखरागं समं जनाः ॥ २ ॥
स सीतालक्ष्मणसखः सत्याद् गुरुमलोपयन् ।
विवेश दण्डकारण्यं प्रत्येकं च सतां मनः ॥ ३ ॥
राजाऽपि तद्वियोगार्तः स्मृत्वा शापं स्वकर्मजम् ।
शरीरत्यागमात्रेण शुद्धिलाभममन्यत ॥ ४ ॥
विप्रोषितकुमारं तद्राज्यमस्तमितेश्वरम् ।
रन्ध्रान्वेषणदक्षाणां द्विषामामिषतां ययौ ॥ ५ ॥
अथानाथाः प्रकृतयो मातृबन्धुनिवासिनम् ।
मौलैरानाययामासुर्भरतं स्तम्भिताश्रुभिः ॥ ६ ॥
श्रुत्वा तथाविधं मृत्युं कैकेयीतनयः पितुः ।
मातुर्न केवलं स्वस्याः श्रियोऽप्यासीत्पराङ्मुखः ॥ ७ ॥
ससैन्यश्चान्वगाद्रामं दर्शितानाश्रमालयैः ।
तस्य पश्यन्सौमित्रेरुदश्रुर्वसतिद्रुमान् ॥ ८ ॥
चित्रकूटवनस्थं च कथितस्वर्गतिर्गुरोः ।
लक्ष्म्या निमन्त्रयाञ्चक्रे तमनुच्छिष्टसम्पदा ॥ ९ ॥
तमशक्यमपाक्रष्टुं निर्देशात्स्वर्गिणः पितुः ।
ययाचे पादुके पश्चात्कर्तुं राज्याधिदेवते ॥ १० ॥

स विसृष्टस्तथेत्युक्त्वा भ्रात्रा नैवाविशत्पुरीम् ।
नन्दिग्राममगतस्तस्य राज्यं न्यासमिवाभुनक् ॥ ११ ॥
दृढभक्तिरिति ज्येष्ठे राज्यतृष्णापराङ् मुखः ।
मातुः पापस्य भरतः प्रायश्चित्तमिवाकरोत् ॥ १२ ॥

रघुवंशम्—चतुर्विंशसर्गत उद्धृतम् । लोकापवादभयात्
रामस्य वैदेहीपरित्यागसंकल्पः ।

निर्बन्धपृष्टः स जगाद सर्वं स्तुवन्ति पौराश्चरितं त्वदीयम् ।
अन्यत्र रक्षोभवनोषितायाः परिग्रहान्मानवदेवदेव्याः ॥१॥
कलत्रनिन्दागुरुणा किलैवमभ्याहतं कीर्तिविपर्ययेण ।
अयोघनेनाय इवाभितप्तं वैदेहिबन्धोर्हृदयं विदद्रे ॥ २ ॥
किमात्मनिर्वादकथामुपेक्षे जायामदोषामुत संत्यजामि ।
इत्येकपक्षाश्रयविक्लवत्वादासीत्स दोलाचलचित्तवृत्तिः॥३॥
निश्चित्य चानन्यनिवृत्तिवाच्यं त्यागेन पत्न्या परिमाष्टुमैच्छत्
अपि स्वदेहात्किमुतेंद्रियार्थाद्यशोधनानां हि यशो गरीयः ४॥
स सन्निपात्यावरजान्हतौजास्तद्विक्रियादर्शनलुप्तहर्षान् ।
कौलीनमात्माश्रयमाचचक्षे तेभ्यः पुनश्चेदमुवाच वाक्यम् ५॥
राजर्षिवंशस्य रविप्रसूतेरुपस्थितः पश्यत कीदृशोऽयम् ।
मत्तः सदाचारशुचेः कलङ्कः पयोदवातादिव दर्पणस्य ॥६॥
पौरेषु सोऽहं बहुलीभवन्तमपां तरङ्गेष्विव तैलबिन्दुम् ।
सोढुं न तत्पूर्वमवर्णमीशे आलानिकं स्थाणुमिव द्विपेन्द्रः ॥
तस्यापनोदाय फलप्रवृत्तावुपस्थितायामपि निर्व्यपेक्षा ।
त्यक्ष्यामि वैदेहसुतां पुरस्तात्समुद्रनेमिं पितुराज्ञयैव ॥ ८ ॥

प्रवैमि चैनामनघेति किंतु लोकापवादो बलवान्मतो मे ।
छाया हि भूमेः शशिनो मलत्वेनारोपिता शुद्धिमतः प्रजाभिः ९

# ८. भर्तृहरिः ।

## ( क ) नीतिशतकम् ।

अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः ।
ज्ञानलवदुर्विदग्धं ब्रह्मापि नरं न रंजयति ॥ ३ ॥
यदा किञ्चिज्ज्ञोऽहं द्विप इव मदान्धः समभवं
तदा सर्वज्ञोऽस्मीत्यभवदवलिप्तं मम मनः ।
यदा किञ्चिद् किञ्चिद् बुधजनसकाशादवगतं
तदा मूर्खोऽस्मीति ज्वर इव गदो मे व्यपगतः ॥ ८ ॥
शिरः शार्वं स्वर्गात् पतति शिरसस्तत् क्षितिधरं
महीध्रादुत्तुङ्गादवनिमवनेश्चापि जलधिम् ।
अधोऽधो गङ्गेयं पदमुपगता स्तोकमथवा
विवेकभ्रष्टानां भवति विनिपातः शतमुखः ॥ १० ॥
हर्तुर्याति न गोचरं किमपि शं पुष्णाति यत् सर्वदा
ह्यर्थिभ्यः प्रतिपाद्यमानमनिशं प्राप्नोति वृद्धिं पराम् ।
कल्पान्तेष्वपि न प्रयाति निधनं विद्याख्यमन्तर्धनं
येषां तान् प्रति मानमुज्झत नृपाः कस्तैःसह स्पर्धते॥१६॥
केयूरा न विभूषयन्ति पुरुषं हारा न चन्द्रोज्ज्वला ।

न स्नानं न विलेपनं न कुसुमं नालंकृता मूर्धजाः ।
वाण्येका समलङ्करोति पुरुषं या संस्कृता धार्यते
क्षीयन्ते खलु भूषणानि सततं वाग्भूषणं भूषणम् ॥ १६ ॥
प्रारभ्यते न खलु विघ्नभयेन नीचैः
प्रारभ्य विघ्नविहता विरमन्ति मध्याः ।
विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः
प्रारभ्य तत्तमजना न परित्यजन्ति ॥ २० ॥

## ( ख ) वैराग्यशतकम् ।

बलिभिर्मुखमाक्रान्तं पलितैरङ्कितं शिरः ।
गात्राणि शिथिलायन्ते तृष्णैका तरुणायते ॥ १४ ॥
त्वं राजा वयमप्युपासितगुरुप्रज्ञाभिमानोन्नताः
ख्यातस्त्वं विभवैर्यशांसि कवयो दिक्षु प्रतन्वन्ति नः ।
इत्थं मानद नातिदूरमुभयोरप्यावयोरन्तरं
यद्यस्मासु पराङ्मुखोऽसि वयमप्येकान्ततो निःस्पृहाः॥२३॥
अहौ वा हारे वा बलवति रिपौ वा सुहृदि वा
मणौ वा लोष्ठे वा कुसुमशयने वा दृषदि वा ।
तृणे वा स्त्रैणे वा मम समदृशो यान्तु दिवसाः
सदा पुण्येऽरण्ये शिवशिवशिवेति प्रजपतः ॥ ४० ॥
वयमिह परितुष्टा वल्कलैस्त्वं च लक्ष्म्या
सम इह परितोषो निर्विशेषो विशेषः ।
स तु भवति दरिद्रो यस्य तृष्णा विशाला

मनसि च परितुष्टे कोऽर्थवान् को दरिद्रः ॥ ४६ ॥
गङ्गातरङ्गहिमशीकरशीतलानि
विद्याधराध्युषितचारुशिलातलानि ।
स्थानानि किं हिमवतः प्रलयं गतानि
यत् सावमानपरपिण्डरता मनुष्याः ॥ ६८ ॥
मही रम्या शय्या विपुलमुपधानं भुजलता ।
वितानं चाकाशं व्यजनमनुकूलोऽयमनिलः ।
स्फुरद्दीपश्चन्द्रो विरतिवनितासङ्गमुदितः ।
सुखं शान्तः शेते मुनिरतनुभूतिर्नृप इव॥७७॥

## ९. बाणः ।

### ( क ) शुकनासोपदेशः ।

आलोकयतु तावत् कल्याणाभिनिवेशी लक्ष्मीमेव प्रथमम् । इयं हि लब्धापि खलु दुःखेन परिपाल्यते । दृढगुणपाशसन्दाननिष्पन्दीकृतापि नश्यति । न परिचयं रक्षति । नाभिजनमीक्षते । न रूपमालोकयते । न कुलक्रममनुवर्तते । न शीलं पश्यति । न वैदग्ध्यं गणयति । न श्रुतमाकर्णयति । न धर्ममनुरुध्यते । न त्यागमाद्रियते । न विशेषज्ञतां विचारयति । नाचारं पालयति । न सत्यमनुबुध्यते । न लक्षणं प्रमाणीकरोति । गन्धर्वनगरलेखेव पश्यत एव नश्यति ।

एवंविधया चानया दुराचारया कथमपि दैववशेन परिगृहीता विक्लवा भवन्ति राजानः। सर्वाविनयाधिष्ठानतां च गच्छन्ति। मिथ्यामाहात्म्यगर्वनिर्भरा न प्रणमन्ति देवताभ्यः। न पूजयन्ति द्विजातीन्। न मानयन्ति मान्यान्। नार्चयन्त्यर्चनीयान्। नाभिवादयन्त्यभिवादनार्हान्। नाभ्युत्तिष्ठन्ति गुरून्। जरावैक्लव्यप्रलपितमिति पश्यन्ति वृद्धजनोपदेशम्। आत्मप्रज्ञापरिभव इत्यसूयन्ति सचिवोपदेशाय। कुप्यन्ति हितवादिने। सर्वथा तमभिनन्दन्ति, तमालपन्ति, तं पार्श्वे कुर्वन्ति, तं संवर्धयन्ति, तेन सह सुखमवतिष्ठन्ते, तस्मै ददति, तं मित्रतामुपनयन्ति, तस्य वचनं शृण्वन्ति, तत्र वर्षन्ति, तं बहु मन्यन्ते, तमाप्तमापादयन्ति, योऽहर्निशमनवरतमुपरचिताञ्जलिरधिदैवतमिव विगतान्यकर्तव्यः स्तौति, यो वा माहात्म्यमुद्भावयति।

तदेवंप्रायेऽतिकुटिलकष्टचेष्टासहस्रदारुणे राज्यतन्त्रेऽस्मिन् महामोहकारिणि च यौवने, कुमार! तथा प्रयतेथा यथा नोपहस्यसे जनैः, न निन्द्यसे साधुभिः, न धिक्क्रियसे गुरुभिः, नोपालभ्यसे सुहृद्भिः, न शोच्यसे विद्वद्भिः यथा च न प्रकाश्यसे विटैः न प्रतार्यसे कुशलैः, नावलुप्यसे सेवकवृकैः, न वञ्च्यसे धूर्तैः, न प्रलोभ्यसे वनिताभिः, न विडम्ब्यसे लक्ष्म्या, न नर्त्यसे मदेन, नाक्षिप्यसे विषयैः, न विकृष्यसे रागेण, नापह्रियसे सुखेन। कामं भवान् प्रकृत्यैव धीरः।

पित्रा च महता प्रयत्नेन समारोपितसंस्कारः। तरलहृदय प्रतिबुद्धं च मदयन्ति धनानि। तथापि भवद्गुणसन्तोषो मामेवं मुखरीकृतवान्। इदमेव च पुनः पुनरभिधीयसे—विद्वांसमपि सचेतनमपि महासत्त्वमपि अभिजातमपि धीरमपि प्रयत्नवन्तमपि पुरुषमियं दुर्विनीता खलीकरोति लक्ष्मीरिति। सर्वथा कल्याणैः पित्रा क्रियमाणमनुभवतु भवान् नवयौवराज्याभिषेकमङ्गलम्। कुलक्रमागताम् उद्वह पूर्वपुरुषैरूढां धुरम्। अवनमय द्विषतां शिरांसि। उन्नमय बन्धुवर्गम्। अभिषेकानन्तरं च प्रारब्धदिग्विजयः परिभ्रमन्, विजितामपि तव पित्रा सप्तद्वीपभूषणां पुनर्विजयस्व वसुन्धराम्। अयं च ते कालः प्रतापमारोपयितुम्। आरूढप्रतापो हि राजा त्रैलोक्यदर्शीव सिद्धादेशोभवति। इत्येतावदभिधायोपशशाम।

## ( ख ) बाणस्य सखायः।

कृतोपनयनादिक्रियाकलापस्य समावृत्तस्य चतुर्दशवर्ष देशीयस्य पिता अपि श्रुतिस्मृतिविहितं कृत्वा द्विजजनोचितं निखिलं पुण्यजातं कालेन अदशमीस्थ एव अस्तम् अगात्। संस्थिते च पितरि महता शोकेन आभीलम् अनुप्राप्तो दिवानिशं दह्यमानहृदयः कथं कथमपि कतिपयान् दिवसान् आत्मगृहे एव अनैषीत्। गते च विरलतां शोके शनैः शनैः अविनयनिदानतया स्वातन्त्र्यस्य, कुतूहल-

बहुलतया च बालभावस्य, धैर्यप्रतिपत्तया च यौवना-
रम्भस्य शैशवोचितानि अनेकानि चापलानि आचर-
न्नित्वरो बभूव । अभवंश्च अस्य सवयसः समानाः सुहृदः
सहायाश्च । तथा च, भ्रातरौ पारशवौ चन्द्रसेनमातृषेणौ,
भाषाकविः ईशानः परं मित्रं प्रणयिनौ रुद्रनारायणौ,
विद्वांसा वारबाण-वासवाणौ, वर्णकविःवेणीभारतः,प्राकृत-
कृत कुलपुत्रो वायुविकारः, वन्दिनौ अनङ्गबाणसूचीबाणौ,
कात्यायनिका चक्रवाकिका, जाङ्गलिको मयूरकः, ताम्बूल-
दायकः चण्डकः भिषक्पुत्रो मन्दारकः पुस्तकवाचकः
सुदृष्टिः कलादश्चामीकरः हैरिकः सिन्धुषेणः लेखको
गोविन्दकः चित्रकृद् वीरवर्मा, पुस्तकृत् कुमारदत्तः, मार्द-
ङ्गिको जीमूतः, गायनौ सोमिलग्रहादित्यौ, सैरन्ध्री
कुरङ्गिका, वांशिकौ मधुकरपारावतौ, गान्धर्वोपाध्यायो
दर्दुरकः सांवाहिका केरलिका, लासकयुवा ताण्डविकः ।
आक्षिक आखण्डल, कितवो भीमकः, शैलालियुवा
शिखण्डकः, नर्तकी, हरिणिका, पाराशरी सुमतिः,
क्षपणको वीरदेवः, कथको जयसेनः, शैवो वक्रघोणः
मन्त्रसाधकः करालः असुरविवरव्यसनी लोहिताक्ष,
धातुवादविद् विहङ्गमः, दार्दुरिको दामोदरः, ऐन्द्रजालिकः
चकोराक्ष, मस्करी ताम्रचूडकः । स एतैश्च अन्यैश्च अनुगम्य-
मानो बालतया निध्नताम् उपगतो देशान्तरालोकनकौतु-
काक्षिप्तहृदयः, सत्स्वपि पितृपितामहोपात्तेषु ब्राह्मणजनो-

चितेषु विभवेषु सति च अविच्छिन्ने विद्याप्रसङ्गे गृहात् निरगात्। अगाच्च निरवग्रहो ग्रहवानिव नवयौवनेन स्वैरिणा मनसा महताम् उपहासास्पदताम्।

अथ शनैः शनैः अत्यभ्युदारव्यवहृतिमनोहन्ति बृहन्ति राजकुलानि वीक्षमाणः, निरवद्यविद्याविद्योतितानि च गुरुकुलानि सेवमानः, महार्हालापगम्भीरगुणवद्गोष्ठीश्च उपतिष्ठमानः, स्वभावगम्भीरधीर्धनानि विदग्धमण्डलानि च गाहमानः, पुनरपि तामेव वैपश्चितीम् आत्मवशोचितां प्रकृतिम् अभजत्। महतश्च कालात् तामेव भूयो वात्स्यायन वंशाश्रयाम् आत्मनो जन्मभुवं ब्राह्मणाधिवासम् अगमत्; तत्र च चिरदर्शनात् अभिनवीभूतस्नेहसद्भावैः ससंस्तव प्रकाशितज्ञातेयैः आप्तैःउत्सवदिवस इव आनन्दिताभिगमनो बालमित्रमण्डलस्य मध्यगतो मोक्षसुखम् इव अन्वभवत्।

# १०. भवभूतिः।

## उत्तररामचरितम्।

स्मरसि सुतनु तस्मिन्पर्वते लक्ष्मणेन
प्रतिविहितसपर्यास्वस्थयोस्तान्यहानि।
स्मरसि सरसनीरां तत्र गोदावरीं वा
स्मरसि च तदुपान्तेष्वावयोर्वर्तनानि ॥ १ ॥

अथेदं रक्षोभिः कनकहरिणच्छद्मविधिना

तथा वृत्तं पापैर्व्यथयति यथा क्षालितमपि ।
जनस्थाने शून्ये विकलकरणैरार्यचरितै-
रपि ग्रीवा रोदित्यपि दलति वज्रस्य हृदयम् ॥
विनिश्चेतुं शक्यो न सुखमिति वा दुःखमिति वा
प्रमोहो निद्रा वा किमु विषविसर्पः किमु मदः ।
तव स्पर्शे स्पर्शे मम हि परिमूढेन्द्रियगणो
विकारश्चैतन्यं जडयति च संमीलयति च॥ ३॥
यत्र द्रुमा अपि मृगा अपि बन्धवो मे
यानि प्रियासहचरश्चिरमध्यवात्सम् ।
एतानि तानि बहुकन्दरनिर्झराणि
गोदावरीपरिसरस्य गिरेस्तटानि ॥ ४ ॥
व्यतिषजति पदार्थानान्तरः कोऽपि हेतु-
र्न खलु बहिरुपाधीन् प्रीतयः संश्रयन्ते ।
विकसति हि पतङ्गस्योदये पुण्डरीकं
द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः ॥

# ११. कथासरित्सागरः ।

## (क) नमुचिदानवकथा ।

बभूव नमुचिर्नाम पूर्वं दानवसत्तमः ।
यस्य दानप्रसक्तस्य महावीरस्य नाभवत् ॥
अदेयमहितायापि याचमानाय किंचन ॥ १ ॥

दशवर्षसहस्राणि स तप्त्वा धूमपस्तपः ।
लोहाश्मकाष्ठावध्यत्वं विरिञ्चात्प्राप्तवान्वरम् ॥ २ ॥
ततोऽसकृद्विजित्येन्द्रं कांदिशीकं स तं व्यधात् ।
तत्प्रार्थ्य कश्यपर्षिस्तं देवैः सन्धिमकारयत् ॥ ३ ॥
अथ विश्रान्तवैरास्ते संमन्त्र्यैव सुरासुराः ।
दुग्धाम्भोनिधिमभ्येत्य ममन्थुर्मन्दराद्रिणा ॥ ४ ॥
ततोऽच्युतादयो भागान्कमलाप्रभृतीन्यथा ।
प्रापुस्तथोच्चैःश्रवसं हयं नमुचिराप्तवान् ॥ ५ ॥
अन्ये देवासुराश्चान्यान्प्रदिष्टान्ब्रह्मणा पृथक् ।
लेभिरे विविधान्भागान्मथ्यमानार्णवोत्थितान् ॥ ६ ॥
मन्थपर्यन्तलब्धे च त्रिदशैरमृते हृते ।
तेषामथासुराणां च पुनर्वैरमजायत ॥ ७ ॥
ततो देवासुररणे जघ्ने यो योऽसुरः सुरैः ।
आघ्रायोच्चैःश्रवास्तं तं जीवयामास तत्क्षणम् ॥ ८ ॥
अजेया जज्ञिरे तेन देवानां दैत्यदानवाः ।
ततो विषण्णं वक्ति स्म रहः शक्रं बृहस्पतिः ॥ ९ ॥
एकस्त्वत्रोपायोऽस्ति तं कुरुष्वाविलम्बितम् ।
स्वयं याचस्व गत्वा त्वं नमुचिं तं हयोत्तमम् ॥ १० ॥
विपक्षायापि तुभ्यं तं स हयं न न दास्यति ।
खण्डयिष्यति नाजन्मसंचितं दातृतायशः ॥ ११ ॥
इत्युक्तो देवगुरुणा महेन्द्रस्त्रिदशैः सह ।
गत्वा ययाचे नमुचिं तमुच्चैःश्रवसं हयम् ॥ १२ ॥

न मे पराङ्मुखो गच्छत्यर्थी तत्रापि वासवः ।
तदस्मै नमुचिर्भूत्वा दद्यां नाहं कथं हयम् ॥ १३ ॥
जगत्सु दातृताकीर्तिर्या मया चिरमर्जिता ।
सा चेन्म्लानिं गता तन्मे किं श्रिया जीवितेन वा ॥१४॥
इति सञ्चिन्त्य शक्राय तमुच्चैःश्रवसं ददौ ।
वीर्यमाणोऽपि शक्रेण नमुचिः स महाशयः ॥ १५ ॥
दत्ताश्वमथ विश्वास्य तं गाङ्गेन जघान सः ।
शस्त्राद्यवध्यं फेनेन वज्रन्यस्तेन वृत्रहा ॥ १६ ॥
अहो दुरन्ता संसारे भोगतृष्णा यया हृताः ।
अनौचित्यादकीर्तेश्च देवा अपि न बिभ्यति ॥ १७ ॥
तद्बुद्ध्वा तस्य नमुचेर्दनुमाता तपोबलात् ।
चकार दुःखसंतप्ता संकल्पं शोकशान्तये ॥ १८ ॥
स एव मे पुनर्गर्भे संभूयान्नमुचिर्बली ।
भयाच्च सर्वदेवानामजेयः संयुगेष्विति ॥ १९ ॥
ततः स तस्याः संभूय गर्भे जातोऽसुरः पुनः ।
सर्वरत्नमयो नाम्ना प्रबलो बलयोगतः ॥ २० ॥
सोऽपि तप्ततपाः प्रीणन्प्राणैरप्यर्थिनः कृती ।
शतकृत्वो जिगायेन्द्रं प्रबलो दानवेश्वरः ॥ २१ ॥
ततः संमन्त्र्य देवास्तमुपेत्यैवं ययाचिरे ।
देहं पुरुषमेधार्थमस्मभ्यं देहि सर्वथा ॥ २२ ॥
तच्छ्रुत्वा स रिपुभ्योऽपि तेभ्यो देहमदान्निजम् ।
प्राणानुदारा विसृजन्त्यर्थिनो न पराङ्मुखान् ॥ २३ ॥

